# ॥ अम्बास्तोत्रं स्वामी विवेकानन्दरचितम् ॥

का त्वं शुभकरे सुखदुःखहस्ते
　　आघूर्णितं भवजलं प्रबलोर्मिभङ्गैः ।
शांतिं विधातुमिह किं बहुधा विभग्नाम्
　　मतः प्रयत्नपरमासि सदैव विश्वे ॥

सम्पादयत्यविरतं त्वविरामवृता
　　या वै स्थिता कृतफलं त्वकृतस्य नेत्री ।
सा मे भवत्वनिदिनं वरदा भवानी
　　जानाम्यहं ध्रुवमिदं धृतकर्मपाशा ॥

को वा धर्मः किमकृतं क्वः कपाललेखः
　　किंवादृष्टं फलमिहास्ति हि यां विना भोः ।
इच्छापाशैर्नियमिता नियमाः स्वतंत्रैः
　　यस्या नेत्री भवति सा शरणं ममाद्या ॥

सन्तानयन्ति जलधिं जनिमृत्युजालम्
　　सम्भावयन्त्यविकृतं विकृतं विभग्नम् ।
यस्या विभूतय इहामितशक्तिपालाः
　　नाश्रित्य तां वद कुत शरणं व्रजामः ॥

मित्रे रिपौ त्वविषमं तव पद्मनेत्रम्
　　स्वस्थे दुःस्थे त्ववितथं तव हस्तपातः ।
मृत्युच्छाया तव दया त्वमृतञ्च मातः
　　मा मां मुञ्चन्तु परमे शुभदृष्टयस्ते ॥

क्वाम्बा सर्वा क्व गणनं मम हीनबुद्धेः
　　धत्तुं दोर्भ्यामिव मतिर्जगदेकधात्रीम् ।
श्रीसञ्चिन्त्यं सुचरणमभयपतिष्ठम्
　　सेवासारैरभिनुतं शरणं प्रपद्ये ॥

या मामा जन्म विनयत्यतिदुःखमार्गैः
　　आसंसिद्धेः स्वकलितैर्ललितैर्विलासैः ।
या मे बुद्धिं सुविदधे सततं धरण्यम्
　　साम्बा सर्वा मम गतिः सफले फले वा ॥